जानासि च यथा शुद्धा सीता तत्त्वेन राघव ॥
भक्त्या च परया युक्ता हिता च तव नित्यशः ॥ २९७ ॥
अहं त्यक्ता च ते वीर अयशोभीरुणा जने ॥
यच्च ते वचनीयं स्यादपवादः समुत्थितः ॥ २९८ ॥
मया च परिहर्तव्यं त्वं हि मे परमा गतिः ॥
यथा भ्रातृषु वर्तेथास्तथा पौरेषु नित्यदा ॥ २९९ ॥
परमो ह्येष धर्मस्ते तस्मात्कीर्तिरनुत्तमा ॥
यत्तु पौरजने राजन्धर्मेण समवाप्नुयात् ॥ ३०० ॥
अहं तु नानुशोचामि स्वशरीरं नरर्षभ ॥
पतिर्हि देवता नार्याः पतिर्बंधुः पतिर्गुरुः ॥ ३०१ ॥
प्राणैरपि प्रियं तस्माद्भर्तुः कार्यं विशेषतः ॥
इति मद्वचनाद्रामो वक्तव्यो मम संग्रहः ॥ ३०२ ॥
निरीक्ष्य माद्य गच्छ त्वमृतुकालातिवर्तिनीम् ॥
एवं ब्रुवन्त्यां सीतायां लक्ष्मणो दीनचेतनः ॥ ३०३ ॥
शिरसा वन्द्य धरणीं व्याहर्तुं न शशाक ह ॥
प्रदक्षिणं च तां कृत्वा रुदन्नेव महास्वनः ॥ ३०४ ॥
आरुरोह पुनर्नावं नाविकं चाभ्यचोदयत् ॥
स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ॥ ३०५ ॥
संमूढ इव दुःखेन रथमध्यारुहद्द्रुतम् ॥
मुहुर्मुहुः परावृत्य दृष्ट्वा सीतामनाथवत् ॥ ३०६ ॥
चेष्टन्ती परतीरस्थां लक्ष्मणः प्रययावथ ॥
दूरस्थं रथमालोक्य लक्ष्मणं च मुहुर्मुहुः ॥ ३०७ ॥
निरीक्ष्यमाणां तूद्विग्नां सीतां शोकः समाविशत् ॥
सा दुःखभारावनता यशस्विनी यशोधरा नाथमपश्यती सती ॥
रुरोद सा बर्हिणनादिते वने महास्वनं दुःखपरायणा सती ३०८

---

## अथ षष्ठ सर्ग ॥ ६ ॥

सीता तु रुदतीं दृष्ट्वा ते तत्र मुनिदारका' ॥ ३०९ ॥
प्राद्रवन्यत्र भगवानास्ते वाल्मीकिरुग्रधी ॥
अभिवाद्य मुने॰ पादौ मुनिपुत्रा महर्षये ॥ ३१० ॥
सर्वे निवेदयामासुस्तस्यास्तु रुदितस्वनम् ॥
नद्यास्तु तीरे भगवन्वरस्त्री कापि दु खिता ॥ ३११ ॥
दृष्टाऽस्माभि प्ररुदिता दृढ शोकपरायणा ॥
अनर्हा दु खशोकाभ्यामेका दीना अनाथवत् ॥ ३१२ ॥
तेषां तु वचनं श्रुत्वा बुद्ध्या निश्चित्य धर्मवित् ॥
तां सीतां शोकभारार्तां वाल्मीकिर्मुनिपुङ्गव ॥ ३१३ ॥
उवाच मधुरां वाणीं ह्लादयन्निव तेजसा ॥
स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया ॥ ३१४ ॥
जनकस्य सुता राज्ञ' स्वागत ते पतिव्रते ॥
आयान्ती चासि विज्ञाता मया धर्मसमाधिना ॥ ३१५ ॥
कारण चैव सर्व मे हृदयेनोपलक्षितम् ॥
अपापा वेद्मि सीते ते तपोलब्धेन चक्षुषा ॥ ३१६ ॥
विस्रब्धा भव वैदेहि सांप्रत मयि वर्तसे ॥
आश्रमस्याविदूरे मे तापस्यस्तपसि स्थिता ॥ ३१७ ॥
तास्त्वां वत्से यथावत्स पालयिष्यन्ति नित्यश' ॥
इदमर्घ्यं प्रतीच्छ त्व विस्रब्धा विगतज्वरा ॥ ३१८ ॥
यथा स्वगृहमभ्येत्य विषादं चैव मा कृथा ॥
श्रुत्वा तु भाषित सीता मुने परममद्भुतम् ॥ ३१९ ॥
शिरसा वंद्य चरणौ तथेत्याह कृतांजलि ॥
तं प्रयान्तं मुनिं सीता प्राञ्जलि' पृष्ठतोऽन्वगात् ॥ ३२० ॥
तं दृष्ट्वा मुनिमायान्तं वैदेह्या मुनिपत्नयः ॥
उपाजग्मुर्मुदा युक्ता वाल्मीकिरिदमब्रवीत् ॥ ३२१ ॥

सीतेयं समनुप्राप्ता पत्नी रामस्य धीमतः ॥
अपापा पतिना त्यक्ता परिपाल्या मया सदा ॥ ३२२ ॥
इमां भवत्यः पश्यन्तु स्नेहेन परमेण हि ॥
गौरवान्मम वाक्याच्च पूज्या वोऽस्तु विशेषतः ॥ ३२३ ॥
मुहुर्मुहुश्च वैदेहीं परिदाय महायशाः ॥
स्वमाश्रमं शिष्यवृतः पुनरायान्महातपाः ॥ ३२४ ॥

## अथ सप्तमः सर्गः ॥ ७ ॥

तत्र तां रजनीमुष्य केशिन्यां रघुनन्दनः ॥
प्रभाते पुनरुत्थाय लक्ष्मणः प्रययौ तदा ॥ ३२५ ॥
ततोऽर्धदिवसे प्राप्ते प्रविवेश महारथः ॥
अयोध्यां रत्नसंपूर्णां हृष्टपुष्टजनावृताम् ॥ ३२६ ॥
सौमित्रिस्तु परं दैन्यं जगाम सुमहामतिः ॥
रामपादौ समासाद्य वक्ष्यामि किमहं गतः ॥ ३२७ ॥
तस्यैवं चिन्तयानस्य भवनं शशिसंनिभम् ॥
रामस्य परमोदारं पुरस्तात्समदृश्यत ॥ ३२८ ॥
राज्ञस्तु भवनद्वारि सोऽवतीर्य नरोत्तमः ॥
अवाङ्मुखो दीनमनाः प्रविवेशानिवारितः ॥ ३२९ ॥
स दृष्ट्वा राघवं दीनमासीनं परमासने ॥
नेत्राभ्यामश्रुपूर्णाभ्यां ददर्शाग्रजमग्रतः ॥ ३३० ॥
जग्राह चरणौ तस्य लक्ष्मणो दीनचेतनः ॥
उवाच दीनया वाचा प्राञ्जलिः सुसमाहितः ॥ ३३१ ॥
आर्यस्याज्ञां पुरस्कृत्य विसृज्य जनकात्मजाम् ॥
गङ्गातीरे यथोद्दिष्टे वाल्मीकेराश्रमे शुभे ॥ ३३२ ॥
तत्र तां च शुभाचारामाश्रमान्ते यशस्विनीम् ॥
पुनरप्यागतो वीरपादमूलमुपासितुम् ॥ ३३३ ॥
मा शुचः पुरुषव्याघ्र कालस्य गतिरीदृशी ॥
त्वद्विधा नहि शोचन्ति बुद्धिमन्तो मनस्विनः ॥ ३३४ ॥

सर्वे क्षयान्ता निचया पतनान्ता' समुच्छ्रया ॥
मयोगा विप्रयोगान्ता मरणान्त च जीवितम् ॥ ३३५ ॥
तस्मात्पुत्रेषु दारेषु मित्रेषु च धनेषु च ॥
नातिप्रसङ्ग' कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् ॥ ३३६ ॥
शक्तस्त्वमात्मनाऽऽत्मानं विनेतु मनसा मन ॥
लोकान्सर्वांश्च काकुत्स्थ किं पुन शोकमात्मन' ॥ ३३७ ॥
नेदृशेषु विमुह्यन्ति त्वाद्विधा पुरुषर्षभा ॥
अपवाद' स किल ते पुनर्गेष्यति राघव ॥ ३३८ ॥
यदर्थं मैथिली त्यक्ता अपवादभयान्नृप ॥
सोऽपवाद पुरे राजन्भविष्यति न सशय ॥ ३३९ ॥
स त्व पुरुषशार्दूल धैर्येण सुसमाहित' ॥
त्यजेमा दुर्बलां बुद्धि सतापं मा कुरुष्व ह ॥ ३४० ॥
एवमुक्त स काकुत्स्थो लक्ष्मणेन महात्मना ॥
उवाच परया प्रीत्या सौमित्रिं मित्रवत्सल ॥ ३४१ ॥
एवमेतन्नरश्रेष्ठ यथा वदसि लक्ष्मण ॥
परितोषश्च मे वीर मम कार्यानुशासने ॥ ३४२ ॥
निवृत्तिश्चागता सौम्य संतापश्च निराकृत ॥
भवद्वाक्यैः सुरुचिरैरनुनीतोऽस्मि लक्ष्मण ॥ ३४३ ॥
तत' प्रभाते विमले कृतपूर्वाह्णिकक्रिय ॥
अभिचक्राम काकुत्स्थो दर्शन पौरकार्यवित् ॥ ३४४ ॥
प्रवेशयामास तदा तापसा सुदुरासदान् ॥
शतं समधिक तत्र दीप्यमानं स्वतेजसा ॥ ३४५ ॥
उपविष्टान्नृपोंस्तत्र दृष्ट्वा परपुरजय ॥
प्रयत प्राञ्जलिर्भूत्वा राघवो वाक्यमब्रवीत् ॥ ३४६ ॥
किमागमनकार्यं व किं करोमि समाहित' ॥
आज्ञाप्योऽहं महर्षीणा सर्वकामकर सुखम् ॥ ३४७ ॥
तस्य तद्वचन श्रुत्वा साधुकारो महानभूत् ॥
ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ॥ ३४८ ॥

तथा ब्रुवति काकुत्स्थे भार्गवो वाक्यमब्रवीत् ॥
भयानां शृणु यन्मूलं देशस्य च नरेश्वर ॥ ३४९ ॥
पूर्वं कृतयुगे राजन्दैतेयः सुमहामतिः ॥
लोलापुत्रोऽभवज्ज्येष्ठो मधुर्नाम महासुरः ॥ ३५० ॥
तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या ॥
विश्वावसोरपत्यं साऽप्यनलायां महाप्रभा ॥ ३५१ ॥
तस्याः पुत्रो महावीर्यो लवणो नाम दारुणः ॥
बाल्यात्प्रभृति दुष्टात्मा पापान्येव समाचरन् ॥ ३५२ ॥
स प्रभावेण शूलस्य दौरात्म्येनात्मनस्तथा ॥
संतापयति लोकांस्त्रीन्विशेषेण च तापसान् ॥ ३५३ ॥
प्रतिज्ञाय तदा तेषां मुनीनामुग्रतेजसाम् ॥
स भ्रातॄन्सहितान्सर्वानुवाच रघुनन्दनः ॥ ३५४ ॥
को हन्ता लवणं वीरः कस्यांशः स विधीयताम् ॥
भरतस्य महाबाहोः शत्रुघ्नस्य च धीमतः ॥ ३५५ ॥
शत्रुघ्नस्त्वब्रवीद्वाक्यं प्रणिपत्य नराधिपम् ॥
कृतकर्मा महाबाहुर्मध्यमो रघुनन्दन ॥ ३५६ ॥
आर्येण हि पुरा शून्या त्वयोध्या परिपालिता ॥
संतापं हृदये कृत्वा आर्यस्यागमनं प्रति ॥ ३५७ ॥
प्रेष्ये मयि स्थिते राजन्न भूयः क्लेशमाप्नुयात् ॥
तथा ब्रुवति शत्रुघ्ने राघवः पुनरब्रवीत् ॥ ३५८ ॥
एवं भवतु काकुत्स्थ क्रियतां मम शासनम् ॥
राज्ये त्वामभिषेक्ष्यामि मधोस्तु नगरे शुभे ॥ ३५९ ॥
निवेशय महाबाहो भरतं यद्यवेक्षसे ॥
शूरस्त्वं कृतविद्यश्च समर्थश्च निवेशने ॥ ३६० ॥
स त्वं हत्वा मधुसुतं लवणं पापनिश्चयम् ॥ ॥
राज्यं प्रशाधि धर्मेण वाक्यं मे यद्यवेक्षसे ॥ ३६१ ॥

अभिषेकं च काकुत्स्थ प्रतीच्छस्व ममोद्यतम् ॥
अद्यैव पुरुषव्याघ्रमभिषेक्ष्यामि राघवम् ॥ ३६२ ॥
पुरोधसं च काकुत्स्थ नैगमानृत्विजस्तथा ॥
मन्त्रिणश्चैव तान्सर्वानानयध्वं ममाज्ञया ॥ ३६३ ॥
ततोऽभिषिक्तं शत्रुघ्नमङ्कमारोप्य राघवः ॥
उवाच मधुरां वाणीं तेजस्तस्याभिपूरयन् ॥ ३६४ ॥
अयं शरस्त्वमोघस्ते दिव्यः परपुरंजयः ॥
अनेन लवणं सौम्य हन्तासि रघुनन्दन ॥ ३६५ ॥
एक एव धनुष्पाणिर्गच्छ त्वं मधुनो वनम् ॥
यथा त्वां न प्रजानाति गच्छन्तं युद्धकाङ्क्षिणम् ॥ ३६६॥
लवणस्तु मधोः पुत्रस्तथा गच्छेरशङ्कितम् ॥
न तस्य मृत्युरन्योऽस्ति कश्चिद्धि पुरुषर्षभ ॥ ३६७ ॥
दर्शनं योऽभिगच्छेत स वध्यो लवणेन हि ॥
महर्षीस्तु पुरस्कृत्य प्रयान्तु तव सैनिकाः ॥ ३६८ ॥
यथा ग्रीष्मावशेषेण तरेयुर्जाह्नवीजलम् ॥
प्रस्थाप्य च बलं सर्वं मासमात्रोषितः पथि ॥ ३६९ ॥
एक एवाशु शत्रुघ्नो जगाम त्वरितं तदा ॥
द्विरात्रमन्तरे शूर उष्य राघवनन्दनः ॥ ३७० ॥
वाल्मीकेराश्रमं पुण्यमगच्छद्वासमुत्तमम् ॥
यामेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् ॥ ३७१ ॥
तामेव रात्रिं सीताऽपि प्रसूता दारकद्वयम् ॥
ततोऽर्धरात्रसमये बालका मुनिदारकाः ॥ ३७२ ॥
वाल्मीकेः प्रियमाचख्युः सीतायाः प्रसवं शुभम् ॥
भगवन्रामपत्नी सा प्रसूता दारकद्वयम् ॥ ३७३ ॥
ततो रक्षां महातेजः कुरु भूतविनाशिनीम् ॥
तेषां तद्वचनं श्रुत्वा महर्षिः समुपागमत् ॥ ३७४ ॥
बालचन्द्रप्रतीकाशौ देवपुत्रौ महौजसौ ॥
[illegible]म तत्र हृष्टात्मा ददर्श च कुमारकौ ॥ ३७५ ॥
[illegible]र्भी चाकरोत्ताभ्यां रक्षां रक्षोविनाशिनीम् ॥
यस्तयोः पूर्वजो जातः स कुशैर्मन्त्रसत्कृतैः ॥ ३७६ ॥

निर्माजनीयस्तु तदा कुश इत्यस्य नाम तत् ॥
यश्चावरोऽभवत्ताभ्यां लवेन सुसमाहितः ॥ ३७७ ॥
निर्माजनीयो वृद्धाभिर्लवेति च स नामतः ॥
एवं कुशलवौ नाम्ना तावुभौ यमजातकौ ॥ ३७८ ॥
मत्कृताभ्यां च नामभ्यां ख्यातियुक्तौ भविष्यतः ॥
तां रक्षां जगृहुस्तांश्च मुनिहस्तात्समाहिताः ॥ ३७९ ॥
अकुर्वंश्च ततो रक्षां तयोर्विगतकल्मषाः ॥
तथा तां क्रियमाणां च वृद्धाभिर्गोत्रनाम च ॥ ३८० ॥
संकीर्तनं च रामस्य सीतायाः प्रसवौ शुभौ ॥
अर्धरात्रे तु शत्रुघ्नः शुश्राव सुमहत्प्रियम् ॥ ३८१ ॥
पर्णशालां ततो गत्वा मातर्दिष्ट्येति चाब्रवीत् ॥
तदा तस्य प्रहृष्टस्य शत्रुघ्नस्य महात्मनः ॥ ३८२ ॥
व्यतीता वार्षिकी रात्रिः श्रावणी लघुविक्रमा ॥
प्रभाते सुमहावीर्यः कृत्वा पौर्वाह्णिकीं क्रियाम् ॥ ३८३ ॥
मुनिं प्राञ्जलिरामन्त्र्य ययौ पश्चान्मुखः पुनः ॥
ततः प्रभाते विमले तस्मिन्काले स राक्षसः ॥ ३८४ ॥
निर्गतस्तु पुराद्वीरो भक्ष्याहारप्रचोदितः ॥
ततोऽर्धदिवसे प्राप्ते क्रूरकर्मा स राक्षसः ॥ ३८५ ॥
आगच्छद्बहुसाहस्रं प्राणिनां भारमुद्वहन् ॥
स मुमोच महाबाणं लवणस्य महोरसि ॥ ३८६ ॥
उरस्तस्य विदार्याशु प्रविवेश रसातलम् ॥
शत्रुघ्नशरनिर्भिन्नो लवणः स निशाचरः ॥ ३८७ ॥
पपात सहसा भूमौ वज्राहत इवाचलः ॥
स पुरा दिव्यसंकाशो वर्षे द्वादशमे शुभे ॥ ३८८ ॥
निविष्टः शूरसेनानां विषयश्चाकुतोभयः ॥
क्षेत्राणि सस्ययुक्तानि काले वर्षति वासवः ॥ ३८९ ॥
तस्य बुद्धिः समुत्पन्ना निवेश्य मधुरां पुरीम् ॥
रामपादौ निरीक्षेऽहं वर्षे द्वादश आगते ॥ ३९० ॥

संस्थाप्य तु स शत्रुघ्न भ्रातृभ्यां सह राघव ॥
प्रमुमोद सुखी राज्य धर्मेण परिपालयन् ॥ ३९१ ॥

## अथ अष्टम सर्ग ॥ ८ ॥

तत कतिपयाह सु वृद्धो जानपदो द्विज ॥
मृत बालमुपादाय राजद्वारमुपागमत् ॥ ३९२ ॥
किं नु मे दुष्कृत कर्म पुरा देहान्तरे कृतम् ॥
रुदन्बहुविधा वाच स्नेहदु खसमन्वित ॥ ३९३ ॥
अप्राप्तयौवन बाल पञ्चवर्षसहस्रकम् ॥
अकाले कालमापन्न मम दु खाय पुत्रक ॥ ३९४ ॥
राजद्वारि मरिष्यामि पत्न्यासार्धमनाथवत् ॥
ब्रह्महत्या ततो राम समुपेत्य सुखी भव ॥ ३९५ ॥
तथा तु करुण तस्य द्विजस्य परिदेवनम् ॥
शुश्राव राघव सर्व दु खशोकसमन्वितम् ॥ ३९६ ॥
स दु खेन च सतप्तो मन्त्रिणस्तानुपाह्वयत् ॥
वसिष्ठ वामदेव च भ्रातृश्च सह नैगमान् ॥ ३९७ ॥
ततो द्विजा वसिष्ठेन सार्धमष्टौ प्रवेशिता ॥
राजान देवमकाशं वर्धस्वेति ततोऽब्रुवन् ॥ ३९८ ॥
राघव सर्वमाचष्टे द्विजोऽयमुपरोधति ॥
तस्य तद्वचन श्रुत्वा राज्ञो दीनस्य नारद ॥ ३९९ ॥
प्रत्युवाच शुभ वाक्यमृषीणां सनिधौ स्वयम् ॥
शृणु राजन्यथाकाले प्र ा बालस्य सक्षय ॥ ४०० ॥
श्रुत्वा कर्तव्यता राजन्कुरुष्व रघुनन्दन ॥
पुरा कृतयुगे राजन्ब्राह्मणा वै तपस्विन ॥ ४०१ ॥
अब्राह्मणस्तदा राजन्न तपस्वी कथचन ॥
तस्मिन्युगे प्रज्वलिते ब्रह्मभूते त्वनावृते ॥ ४०२ ॥
अमृत्यवस्तदा सर्वे जज्ञिरे दीर्घदर्शना ॥
ततस्त्रेतायुग नाम मानवाना वपुष्मताम् ॥ ४०३ ॥
क्षत्रिया यत्र जायन्ते पूर्वेण तपसाऽन्विता ॥
वीर्येण तपसा चैव तेऽधिका पूर्वजन्मनि ॥ ४०४ ॥

ब्रह्म क्षत्रं च तत्सर्वं यत्पूर्वमवरं च यत् ॥
युगयोरुभयोरासीत्समवीर्यसमन्वितम् ॥ ४०५ ॥
अपश्यन्तस्तु ते सर्वे विशेषमधिकं ततः ॥
स्थापनं चक्रिरे तत्र चातुर्वर्ण्यस्य संमतम् ॥ ४०६ ॥
तस्मिन्युगे प्रज्वलिते धर्मभूते ह्यनावृते ॥
अधर्मः पादमेकं तु पातयत्पृथिवीतले ॥ ४०७ ॥
आमिषं यच्च पूर्वेषां राजसं च मलं भृशम् ॥
अनृतं नाम तद्भूतं क्षिप्तेन पृथिवीतले ॥ ४०८ ॥
अनृतं पातयित्वा तु पादमेकमधर्मतः ॥
ततः प्रादुष्कृतं पूर्वमायुषः परिनिष्ठितम् ॥ ४०९ ॥
पातिते त्वनृते तस्मिन्नधर्मेण महीतले ॥
शुभान्येवाचरँल्लोकः सत्यधर्मपरायणः ॥ ४१० ॥
त्रेतायुगे च वर्तन्ते ब्राह्मणाः क्षत्रियाश्च ये ॥
तपोऽतप्यन्त ते सर्वे शुश्रूषामपरे जनाः ॥ ४११ ॥
स्वधर्मः परमस्तेषां वैश्यशूद्रं तदागमत् ॥
पूजां च सर्ववर्णानां शूद्राश्चक्रुर्विशेषतः ॥ ४१२ ॥
एतस्मिन्नन्तरे तेषामधर्मे चानृते च ह ॥
ततः पूर्वे पुनर्ह्रासमगमन्नृपसत्तम ॥ ४१३ ॥
ततः पादमधर्मस्य द्वितीयमवतारयत् ॥
ततो द्वापरसंख्या सा युगस्य समजायत ॥ ४१४ ॥
तस्मिन्द्वापरसंख्ये तु वर्तमाने युगक्षये ॥
अधर्मश्चानृतं चैव ववृधे पुरुषर्षभ ॥ ४१५ ॥
अस्मिन्द्वापरसंख्याने तपो वैश्यान्समाविशत् ॥
त्रिभ्यो युगेभ्यस्त्रीन्वर्णान्क्रमाद्वै तप आविशत् ॥ ४१६ ॥
त्रिभ्यो युगेभ्यस्त्रीन्वर्णान्धर्मश्च परिनिष्ठितः ॥
न शूद्रो लभते धर्मं युगतस्तु नरर्षभ ॥ ४१७ ॥
हीनवर्णो नृपश्रेष्ठ तप्यते सुमहत्तमः ॥
भविष्यच्छूद्रयोन्यां हि तपश्चर्या कलौ युगे ॥ ४१८ ॥

अधर्मः परमो राजन्द्वापरे शूद्रजन्मन ॥
न वै विषयपर्यन्ते तव राजन्महातपा ॥ ४१९ ॥
अद्य तप्यति दुर्बुद्धिस्तेन बालवधो ह्ययम् ॥
यो ह्यधर्ममकार्यं वा विषये पार्थिवस्य तु ॥ ४२० ॥
करोति चाश्रीमूलं तत्पुरे वा दुर्मतिर्नर ॥
क्षिप्रं च नरकं याति स च राजा न संशयः ॥ ४२१ ॥
अधीतस्य च तप्तस्य कर्मणः सुकृतस्य च ॥
षष्ठं भजति भागं तु प्रजा धर्मेण पालयन् ॥ ४२२ ॥
षड्भागस्य च भोक्तासौ रक्षते न प्रजाः कथम् ॥
स त्वं पुरुषशार्दूल मार्गस्व विषयं स्वकम् ॥ ४२३ ॥
दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर ॥
एवं चेद्धर्मवृद्धिश्च नृणां चायुर्विवर्धनम् ॥ ४२४ ॥
नारदस्य तु तद्वाक्यं श्रुत्वामृतमयं यथा ॥
दक्षिणां दिशमाक्रामत्ततो राजर्षिनन्दन ॥ ४२५ ॥
शैवलस्योत्तरे पार्श्वे ददर्श सुमहत्सरः ॥
तस्मिन्सरसि तप्यन्तं तापसं सुमहत्तपः ॥ ४२६ ॥
ददर्श राघवः श्रीमाँल्लम्ब्यमानमधोमुखम् ॥
राघवस्तमुपागम्य तप्यन्तं तप उत्तमम् ॥ ४२७ ॥
उवाच च नृपो वाक्यं धन्यस्त्वमसि सुव्रत ॥
कस्यां योन्यां तपोवृद्ध वर्तसे दृढविक्रम ॥ ४२८ ॥
कौतूहलात्त्वां पृच्छामि रामो दाशरथिर्ह्यहम् ॥
तस्य तद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मण ॥ ४२९ ॥
अवाक्शिरास्तथाभूतो वाक्यमेतदुवाच ह ॥
शूद्रयोन्यां प्रजातोऽस्मि तप उग्रं समास्थित ॥ ४३० ॥
देवत्वं प्रार्थये राम सशरीरो महायशः ॥
न मिथ्याऽहं वदे राम देवलोकजिगीषया ॥ ४३१ ॥
शूद्रं मां विद्धि काकुत्स्थ शम्बूको नाम नामत ॥
भाषतस्तस्य शूद्रस्य खड्गं सुरुचिरप्रभम् ॥ ४३२ ॥

निष्कृष्य कोशाद्विमलं शिरश्चिच्छेद राघवः ॥
तस्मिञ्शूद्रे हते देवाः सेन्द्राः साग्निपुरोगमाः ॥ ४३३ ॥
साधु साध्विति काकुस्थं ते शशंसुर्मुहुर्मुहुः ॥
तस्मिन्मुहूर्ते बालोपि जीवेन समयुज्यत ॥ ४३४ ॥
गतेषु तेषु काकुत्स्थः पुष्पकादवरुह्य च ॥
ततोऽभिवादयामास अगस्त्यमृषिसत्तमम् ॥ ४३५ ॥
सोभिवाद्य महात्मानं ज्वलन्तमिव तेजसा ॥
आतिथ्यं परमं प्राप्य तां रात्रिं समुपाविशत् ॥ ४३६ ॥
प्रभाते कल्यमुत्थाय कृत्वाह्निकमरिंदमः ॥
ऋषिं समुपचक्राम गमनाय रघूत्तमः ॥ ४३७ ॥
ततोऽर्धेदिवसे प्राप्ते पूज्यमानस्ततस्ततः ॥
अयोध्यां प्राप्य काकुत्स्थो मध्यकक्षामवातरत् ॥ ४३८ ॥

## अथ नवमः सर्गः ॥ ९ ॥

प्राञ्जलिः स तदा भूत्वा राघवो द्विजसत्तमान् ॥
उवाच धर्मसंयुक्तमश्वमेधाश्रितं वचः ॥ ४३९ ॥
तेऽपि रामस्य तच्छ्रुत्वा नमस्कृत्वा वृषध्वजम् ॥
अश्वमेधं द्विजाः सर्वे पूजयन्ति स्म सर्वशः ॥ ४४० ॥
विज्ञाय कर्म तत्तेषां रामो लक्ष्मणमब्रवीत् ॥
प्रेषयस्व महाबाहो सुग्रीवाय महात्मने ॥ ४४१ ॥
राजानश्च महाबाहो ये मे प्रियचिकीर्षवः ॥
ऋषयश्च महाबाहो आह्वयन्तां तपोधनाः ॥ ४४२ ॥
कांचनी मम पत्नी च दीक्षायां ज्ञांश्च कर्मणि ॥
अग्रतो भरतः कृत्वा गच्छत्वग्रे महायशाः ॥ ४४३ ॥
ततोऽभ्यगच्छत्काकुस्थः सह सैन्येन नैमिषम् ॥
यज्ञवाटं महाबाहुर्दृष्ट्वा परममद्भुतम् ॥ ४४४ ॥
प्रहर्षमतुलं लेभे श्रीमानिति च सोऽब्रवीत् ॥
नैमिषे वसतस्तस्य सर्व एव नराधिपाः ॥ ४४५ ॥

आनिन्युरुपहाराश्च तान्रामः प्रत्यपूजयत् ॥
वर्तमाने तथाभूते यज्ञे च परमाद्भुते ॥ ४४६ ॥
सशिष्य आजगामाशु वाल्मीकिर्भगवानृषिः ॥
संदिष्टौ मुनिना तेन तावुभौ मैथिलीसुतौ ॥ ४४७ ॥
यथोक्तमृषिणा पूर्वं सर्वं तत्रोपगायताम् ॥
अथ कर्मान्तरे राजा समाहूय महामुनीन् ॥ ४४८ ॥
पार्थिवांश्च नरव्याघ्रः पण्डितान्नैगमांस्तथा ॥
चित्रज्ञान्वृत्तसूत्रज्ञान्गीतनृत्यविशारदान् ॥ ४४९ ॥
एतान्सर्वान्समानीय गातारौ समवेशयत् ॥
तेषां संवदतां तत्र श्रोतॄणां हर्षवर्धनम् ॥ ४५० ॥
गेयं प्रचक्रतुस्तत्र तावुभौ मुनिदारकौ ॥
ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषम् ॥ ४५१ ॥
न च तृप्तिं ययुः सर्वे श्रोतारो गेयसम्पदा ॥
हृष्टा मुनिगणाः सर्वे पार्थिवाश्च महौजसः ॥ ४५२ ॥
पिबन्त इव चक्षुर्भिः पश्यन्ति स्म मुहुर्मुहुः ॥
ऊचुः परस्परं चेदं सर्व एव समाहिताः ॥ ४५३ ॥
उभौ रामस्य सदृशौ बिम्बाद्बिम्बमिवोद्धृतौ ॥
रामो बहून्यहान्येव तद्गीतं परमं शुभम् ॥ ४५४ ॥
शुश्राव मुनिभिः सार्धं पार्थिवैः सह वानरैः ॥
तस्मिन्गीते तु विज्ञाय सीतापुत्रौ कुशीलवौ ॥ ४५५ ॥
तस्याः परिषदो मध्ये रामो वचनमब्रवीत् ॥
दूताञ्शुद्धसमाचारानाहूयात्ममनीषया ॥ ४५६ ॥
मद्वचो ब्रूत गच्छध्वमितो भगवतोऽन्तिके ॥
यदि शुद्धसमाचारा यदि वा वीतकल्मषा ॥ ४५७ ॥
करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम् ॥
छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् ॥ ४५८ ॥
प्रत्ययं दातुकामायास्ततः शंसत मे लघु ॥
श्वः प्रभाते तु शपथं मैथिली जनकात्मजा ॥ ४५९ ॥
करोतु परिषन्मध्ये शोधनार्थं ममैव च ॥
तेषां तद्भाषितं श्रुत्वा रामस्य च मनोगतम् ॥ ४६० ॥

विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ॥
एवं भवतु भद्रं वो यथा वदति राघवः ॥ ४६१ ॥
तथा करिष्यते सीता दैवतं हि पतिः स्त्रियः ॥
तस्यां रजन्यां व्युष्टायां यज्ञवाटं गतो नृपः ॥ ४६२ ॥
ऋषीन्सर्वान्महातेजाः शब्दापयति राघवः ॥
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ॥ ४६३ ॥
विश्वामित्रो दीर्घतमा दुर्वासाश्च महातपाः ॥
पुलस्त्योऽपि तथा शक्तिर्भार्गवश्चैव वामनः ॥ ४६४ ॥
मार्कण्डेयश्च दीर्घायुर्मौद्गल्यश्च महायशाः ॥
गर्गश्च च्यवनश्चैव शतानन्दश्च धर्मवित् ॥ ४६५ ॥
भरद्वाजश्च तेजस्वी अग्निपुत्रश्च सुप्रभः ॥
नारदः पर्वतश्चैव गौतमश्च महायशाः ॥ ४६६ ॥
एते चान्ये च बहवो मुनयः संशितव्रताः ॥
कौतूहलसमाविष्टाः सर्वे एव समागताः ॥ ४६७ ॥
राक्षसाश्च महावीर्या वानराश्च महाबलाः ॥
तदा समागतं सर्वमश्मभूतमिवाचलम् ॥ ४६८ ॥
श्रुत्वा मुनिवरस्तूर्णं ससीतः समुपागमत् ॥
तमृषिं पृष्ठतः सीता अन्वगच्छदवाङ्मुखी ॥ ४६९ ॥
कृताञ्जलिर्बाष्पकला कृत्वा रामं मनोगतम् ॥
तां दृष्ट्वा श्रुतिमायान्तीं ब्रह्माणमनुगामिनीम् ॥ ४७०
वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥
ततो हलाहलाशब्दः सर्वेषामेवमाबभौ ॥ ४७१ ॥
दुःखजन्मविशालेन शोकेनाकुलितात्मनाम् ॥
साधु रामेति केचित्तु साधु सीतेति चापरे ॥ ४७२ ॥
उभावेव च तत्रान्ये प्रेक्षकाः संप्रचुक्रुशुः ॥
ततो मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः ॥ ४७३ ॥
सीतासहायो वाल्मीकिरिति होवाच राघवम् ॥
इयं दाशरथे सीता सुव्रता धर्मचारिणी ॥ ४७४ ॥
अपवादात्परित्यक्ता ममाश्रमसमीपतः ॥
लोकापवादभीतस्य तव राम महाव्रत ॥ ४७५ ॥

प्रत्ययं दास्यते सीता तामनुज्ञातुमर्हसि ॥
इमौ तु जानकीपुत्रावुभौ च यमजातकौ ॥ ४७६ ॥
सुतौ तवैव दुर्धर्षौ सत्यमेतद्ब्रवीमि ते ॥
प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन ॥ ४७७ ॥
न स्मराम्यनृतं वाक्यमिमौ तु तव पुत्रकौ ॥
बहुवर्षसहस्राणि तपश्चर्या मया कृता ॥ ४७८ ॥
नोपाश्नीया फलं तस्या दुष्टेयं यदि मैथिली ॥
इय शुद्धसमाचारा अपापा पतिदेवता ॥ ४७९ ॥
लोकापवादभीतस्य प्रत्यय तव दास्यति ॥
वाल्मीकिनैवमुक्तस्तु राघव' प्रत्यमापत ॥ ४८० ॥
प्राञ्जलिर्जगतो मध्ये दृष्ट्वा ता वरवर्णिनीम् ॥
प्रत्ययश्च पुरा पृत्तो वैदेह्या' सुरसंनिधौ ॥ ४८१ ॥
शपथश्च कृतस्तत्र तेन वेश्म प्रवेशिता ॥
लोकापवादो बलवान्येन त्यक्ता हि मैथिली ॥ ४८२ ॥
नेय लोकभयाद्ब्रह्मन्नपापेत्यभिजानता ॥
परित्यक्ता मया सीता तद्भवान्क्षन्तुमर्हति ॥ ४८३ ॥
जानामि चेमौ पुत्रौ मे यमजातौ कुशीलवौ ॥
शुद्धाया जगतो मध्ये मैथिल्या प्रीतिरस्तु मे ॥ ४८४ ॥
तदद्भुतमिवाचिन्त्य निरैक्षन्त समाहिता ॥
मानवा सर्वराष्ट्रेभ्य पूर्वं कृतयुगे यथा ॥ ४८५ ॥
सर्वान्समागतान्दृष्ट्वा सीता काषायवासिनी ॥
अब्रवीत्प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥ ४८६ ॥
यथाहं राघवादन्यं मनसापि न चिन्तये ॥
तथा मे माधवी देवी विवरं दातुमर्हति ॥ ४८७ ॥
मनसा कर्मणा वाचा यथा राम समर्चये ॥
तथा मे माधवी देवी विवर दातुमर्हति ॥ ४८८ ॥
यथैतत्सत्यमुक्तं मे वेद्मि रामात्पर न च ॥
तथा मे माधवी देवी विवर दातुमर्हति ॥ ४८९ ॥
तथा शपन्त्या वैदेह्यां प्रादुरासीत्तदद्भुतम् ॥
भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥ ४९० ॥

ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः ॥
दिव्यं दिव्येन वपुषा दिव्यरत्नविभूषितैः ॥ ४९१ ॥
तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् ॥
स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥ ४९२ ॥
तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् ॥
पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥ ४९३ ॥
सीताप्रवेशनं दृष्ट्वा तेषामासीत्समागमः ॥
तन्मुहूर्तमिवात्यर्थं समं संमोहितं जगत् ॥ ४९४ ॥
रसातलं प्रविष्टायां वैदेह्यां सर्ववानराः ॥
चुक्रुशुः साधु साध्वीति मुनयो रामसंनिधौ ॥ ४९५ ॥
दण्डकाष्ठमवष्टभ्य बाष्पव्याकुलितेक्षणः ॥
अवाक्शिरा दीनमना रामो ह्यासीत्सुदुःखितः ॥ ४९६ ॥
स रुदित्वा चिरं कालं बहुशो बाष्पमुत्सृजन् ॥
क्रोधशोकसमाविष्टो रामो वचनमब्रवीत् ॥ ४९७ ॥
अभूतपूर्वं शोकं मे मनः स्प्रष्टुमिवेच्छति ॥
पश्यतो मे यथा नष्टा सीता श्रीरिव रूपिणी ॥ ४९८ ॥
साऽदर्शनं पुरा सीता लङ्कां पारे महोदधेः ॥
ततश्चापि मयाऽऽनीता किं पुनर्वसुधातलात् ॥ ४९९ ॥
वसुधे देवि भवति सीता निर्यात्यतां मम ॥
दर्शयिष्यामि वा रोषं यथा मामवगच्छसि ॥ ५०० ॥
तस्मान्निर्यात्यतां सीता विवरं वा प्रयच्छ मे ॥
पाताले नाकपृष्ठे वा वसेयं सहितस्तया ॥ ५०१ ॥
न मे दास्यसि चेत्सीतां यथारूपां महीतले ॥
सपर्वतवनां कृत्स्नां व्यथयिष्यामि ते स्थितिम् ॥ ५०२ ॥
नाशयिष्याम्यहं भूमिं सर्वमापो भवन्त्विह ॥
एवं ब्रुवाणे काकुत्स्थे क्रोधशोकसमन्विते ॥ ५०३ ॥
ब्रह्मा सुरगणैः सार्धमुवाच रघुनन्दनम् ॥ ॥
राम राम न संतापं कर्तुमर्हसि सुव्रत ॥ ५०४ ॥

स्मर त्वं पूर्वकं भाव मन्त्रं चाभिन्नकर्शन ॥
न खलु त्वा महाबाहो स्मारयेय मनुतमम् ॥ ५०५ ॥
आदिकाव्यमिदं राम त्वयि सर्वं प्रतिष्ठितम् ॥
न ह्यन्योऽर्हति काव्याना यशोभाग्राघवादृते ॥ ५०६ ॥
तं जनौघं विसृज्याथ पर्णशालामुपागमत् ॥
तामेव शोचत' सीता सा व्यतीता च शर्वरी ॥ ५०७ ॥
रजन्या तु प्रभाताया समानीय महामुनीन् ॥
गीयतामविशङ्काभ्या राम' पुत्रावुवाच ह ॥ ५०८ ॥
तत समुपविष्टेषु महर्षिषु महात्मसु ॥
भविष्यदुत्तरं काव्यं जगतुस्तौ कुशीलवौ ॥ ५०९ ॥

# रघुवंशोध्दृता वक्ष्यमाणाः श्लोकाः ।

## अथ दशम· सर्गे ॥ १० ॥

ऋषीन्विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान् ॥
राम सीतागतं स्नेह निदधे तदपत्ययो' ॥ ५१० ॥
युधाजितश्च संदेशात्स देशं सिन्धुनामकम् ॥
ददौ दत्तप्रभावाय भरताय भृतप्रज ॥ ५११ ॥
भरतस्तत्र गन्धर्वान्युधि निर्जित्य केवलम् ॥
आतोद्य ग्राहयामास समत्याजयदायुधम् ॥ ५१२ ॥
स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययो' ॥
अभिषिच्याभिषेकार्हौ रामान्तिकमगात्पुन' ॥ ५१३ ॥
अङ्गदं चन्द्रकेतुं च लक्ष्मणोऽप्यात्मसंभवौ ॥
शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ ॥ ५१४ ॥
इत्यारोपितपुत्रास्ते जननीनां जनेश्वरा' ॥
मर्त्यलोकप्रपन्नानां निवापान्विदधु' क्रमात् ॥ ५१५ ॥
उपेत्य मुनिवेषोऽथ काल' प्रोवाच राघवम् ॥
रहःसंवादिनौ पश्येदावां यस्तं त्यजेरिति ॥ ५१६ ॥

तथेति प्रतिपन्नाय विवृतात्मा नृपाय सः ॥
आचख्यौ दिवमध्यास्व शासनात्परमेष्ठिनः ॥ ५१७ ॥
विद्वानपि तयोर्द्वाःस्थः समयं लक्ष्मणोऽभिनत् ॥
भीतो दुर्वाससः शापाद्रामसंदर्शनार्थिनः ॥ ५१८ ॥
स गत्वा सरयूतीरं देहत्यागेन योगवित् ॥
चकारावितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः ॥ ५१९ ॥
तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि ॥
राघवः शिथिलं तस्थौ भुवि धर्मस्त्रिपादिव ॥ ५२० ॥
स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् ॥
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ॥ ५२१ ॥
उदक्प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः ॥
अन्वितः पतिवात्सल्याद्गृहवर्जमयोध्यया ॥ ५२२ ॥
जगृहुस्तस्य चित्तज्ञाः पदवीं हरिराक्षसाः ॥
कदम्बमुकुलस्थूलैरभिवृष्टां प्रजाश्रुभिः ॥ ५२३ ॥
उपस्थितविमानेन तेन भक्तानुकम्पिना ॥
चक्रे त्रिदिवनिःश्रेणिः सरयूरनुयायिनाम् ॥ ५२४ ॥
यद्गोप्रतरकल्पोऽभूत्संमर्दस्तत्र मज्जताम् ॥
अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे ॥ ५२५ ॥
स विभुर्विबुधांशेषु प्रतिपन्नात्ममूर्तिषु ॥
त्रिदशीभूतपौराणां स्वर्गान्तरमकल्पयत् ॥ ५२६ ॥
निर्वर्त्यैवं दशमुखशिरश्छेदकार्यं सुराणाम् ।
विष्वक्सेनः स्वतनुमविशत्सर्वलोकप्रतिष्ठाम् ॥
लङ्कानाथं पवनतनयं चोभयं स्थापयित्वा ।
कीर्तिस्तम्भद्वयमिव गिरौ दक्षिणे चोत्तरे च ॥ ५२७ ॥

---

॥ इति श्रीसंक्षिप्तवाल्मीकिरामायणं समाप्तम् ॥

# अथ सक्षिप्तरामायणस्य शुद्धिपत्रम् ।



| श्लो॰ | अशुद्धम् | शुद्धम् |
| --- | --- | --- |
| | **बालकाण्डम् ॥** | |
| ७ | वसुभि | वसुभिः |
| ,, | कौडन्ये | कौन्ये |
| २३ | ह्लादयन् | ह्लादया |
| २५ | तीरे | तीरे |
| ३१ | संकुलासु | संकुलाम् |
| ३७ | महातेजा | महातेजा |
| ५८ | तीर | तीरे |
| ५९ | महर्षा | आहर्षा |
| ६५ | कृतामवद् | कृतामवन् |
| ६८ | यवयामास | यापयामास |
| ११३ | तस्पृस्वा | तत्पुग्या |
| ११९ | मुस्पद्दु | मुस्पृष्ट |
| १२१ | विमकर्तार | निकर्तार |
| १३७ | तव्युत्स्वा | तव्युग्या |
| १९२ | प्राट् | प्राट् |
| २०१ | संरक्षणीयो | सरक्षणीयो |
| २३२ | तीरे | तीरे |
| २४३ | परस्याय | परस्याय |
| ,, | पूर्वे आश्रम | पूर्वमाश्रम |
| २४४ | तस्तेन | तस्तेन |
| २४६ | महायश | महायशा |
| २५२ | महीत | गृहीत |
| २६० | सारयेनां | सारयेनां |
| २६४ | मध्येऽम्भसो | मध्येऽम्भसो |
| २७८ | सत्यत | सत्यत |
| २७९ | निवेदयद | न्यवेदयद |
| २८८ | सुसाः | सुता |
| २९८ | गम | राम |
| ३४७ | यदा शाप | यदाऽऽशाप |
| ,, | चतसृणां | चतसृणां |
| ३६० | ठर्मिला | ऊर्मिला |
| ३६१ | मुक्ता | मुक्ता |
| ३६२ | धर्मात्मा | धर्मात्मा |
| ३६५ | चतसृणाम् | चतसृणां |
| ३७० | पयार्थ | परार्थ्यौ |
| ३८३ | घोरे | घोर |
| ३८९ | मुक्ता | मुक्ता |
| ४०८ | सग्य | सगम् |
| ४३० | वरयो | परेयी |

| श्लो॰ | अशुद्धम् | शुद्धम् |
| --- | --- | --- |
| | **अयोध्याकाण्डम् ॥ (पूर्वार्द्धम्)** | |
| १६ | महात्मन | महात्मानः |
| २१ | पोरान् | पौरान् |
| ३७ | नवां चग्रे | नवांचग्र |
| ५४ | क्षिप्ता | क्षिप्ता |
| ६२ | केरयी | कैकेयी |
| ६६ | मानामलेने | मानाऽनलेने |
| ७७ | दासीरत्वं | दासीत्वं त्व |
| ८३ | वे र | वैर |
| ९४ | निक्षित | निक्षत |
| १३६ | पाप | पाप |
| १३७ | मयाऽस्म | मयाऽऽस्म |
| १५१ | तव्यक्ष | तव्यक्षे |
| १६० | प्रेक्षिता | प्रेक्षता |
| १६७ | कैकेयी | कैकेयि |
| १७१ | गमस्यो | गमस्यै |
| १९७ | कौसल्यासु | कौसल्या सु |
| २१५ | पयमुरत्ना | पयमुक्ता |
| २२३ | तद्रूहि | तद्रूहि |
| २२५ | वरा | वरौ |
| २२६ | से | मे |
| २६३ | वर्णिनी | वर्णिनीम् |

| श्लो० | अशुद्धम् | शुद्धम् |
|---|---|---|
| २७६ | यादृशो यम | यादृशोऽयम |
| २८५ | शापिताऽस्मि | शापितासि |
| ३०१ | दवाङ्ग | दवाङ्ग् |
| ३११ | चारीणि | चारिणि |
| ३२७ | मृन्दन्ती | मृद्नन्ती |
| ३८१ | सुहृज्जानम् | सुहृज्जनम् |
| ३८८ | जीविनम् | जीवनम् |
| ३९० | इत्युक्ता | इत्युक्त्वा |
| ३९९ | आपृच्छ | आपृच्छय |
| ४१८ | गृहीष्यामि | ग्रहीष्यामि |
| ४२५ | अपक्रमेण | अपक्रमण |
| ४३९ | ची रे | चीरे |
| ,, | पुरुषव्याघ्र | पुरुषव्याघ्र. |
| ५३६ | २३६ | ५३६ |
| ५४१ | सनह्य | सनह्य |
| ५४५ | मुक्ता | मुक्त्वा |
| ५५७ | ती रे | तीरे |
| ५७९ | वत्स्यति | वत्स्यसि |
| ६०९ | चोवास | चोवाच |

## अयोध्याकांडम् ॥
## ( उत्तरार्द्धम् )

| श्लो० | अशुद्धम् | शुद्धम् |
|---|---|---|
| ९ | त्रीणामन्व | स्त्रीणामन्व |
| २१ | तथोक्ता | तथोक्त्वा |
| ४२ | तजसा | तेजसा |
| ५५ | श्वसंञ्च्छोक | श्वसञ्च्छोक |
| ८४ | त्यत्त्वा | त्यक्त्वा |
| १२४ | मुत्त्वा | मुक्त्वा |
| १५७ | अवाकू | अवाक् |
| १५९ | त्यत्त्वा | त्यक्त्वा |
| १६२ | राज्यो च्यु | राज्यश्च्यु |
| १८७ | मुत्त्का | मुक्ता |
| १९३ | मकरोव्रणे | मकरो व्रणे |
| २१३ | हस्यश्व | हस्त्यश्व |

| श्लो० | अशुद्धम् | शुद्धम् |
|---|---|---|
| २४७ | तस्योर्ध्वं | तस्यौर्ध्वं |
| २५८ | १५८ | २५८ |
| २६० | मृन्दन्तौ | मृद्नन्तौ |
| २६४ | ५६४ | २६४ |
| २७४ | वि धान् | विविधान् |
| २७९ | शंखाश्च | शंखांश्च |
| २९८ | इदृशीं | ईदृशीं |
| ३१७ | दिभि ऋ़ित्वि | दिभिर्ऋत्वि |
| ३४२ | रुपदद | रुपादद |
| ३६८ | ण्यपचिता | ण्यवाचितामि |
| ३७० | मुहूर्त | मुहूर्त |
| ३८१ | केकयी | कैकयी |
| ४२८ | वसिष्ठं | वसिष्ठः |
| ४३३ | भुत्तवा | मुक्त्वा |
| ४३७ | प्रत्युत्थाय | समुत्थाय |
| ४५७ | वा निवर्तिनः | वाऽनिवर्तिन |
| ४७४ | तत्र भवन्तं | तत्रभवन्त |
| ४८७ | जीविता | जीवता |
| ४९९ | विधास्यति | विधास्यतः |
| ५११ | ४११ | ५११ |
| ५२५ | अवरुद्धं | अवरुद्धं |
| ५३७ | वसत्य | वसत्य |

## अरण्यकांडम् ॥

| श्लो० | अशुद्धम् | शुद्धम् |
|---|---|---|
| २८ | त्व नाथो | त्वन्नाथो |
| ३१ | क्रियमाणां | क्रियमाणं |
| ४० | षट् | षट् |
| ९७ | वा स | वास |
| १३७ | ज़ूर्पणखां | शूर्पणखा |
| १८९ | युतः | युतम् |
| १९६ | इत्युक्त्वा | इत्युक्ता |
| २०२ | जीवेन्स | जीवेत्स |
| २०६ | बद्धिस्ततो | बुद्धिस्ततो |
| २३१ | गंभीरे | गंभीरे |
| २४५ | द्रुत | द्रुत |

| श्लो॰ | अशुद्धम् | शुद्धम् |
|---|---|---|
| १४७ | पार्श्वस्यकज | पार्श्वस्थ कज |
| १४९ | विसल्यान् | विसल्यान् |
| १६७ | द्रुतम् | द्रुतम् |
| १०७ | श्रुण्ण | श्रुण्ण |
| १२४ | सत्वत | तत्त्वतः |
| १३० | स्नहयिस्यसि | स्नहयिष्यासि |
| १३५ | पुण | पूर्ण |
|  | ० ॥ ४ ॥ | ॥ ८ ॥ |
| २६८ | संयुक्ते धुर्या | संयुक्तेर्धुर्या |
| २८५ | दन्त्वा | दर्वा |
| २९१ | संमवाद | समवाद |
| ४४८ | निवृव | निवृत्त |
| ४७४ | व्हियमाण | व्हियमाणा |
| ४९२ | दृस्येव | कृत्स्नैव |
| ५१४ | पुष्पाढ्य | पुष्पाढ्या |
| ,, | द्रुमम् | द्रुमाम् |

किष्किधाकाण्डम् ॥

| श्लो॰ | अशुद्धम् | शुद्धम् |
|---|---|---|
| ३२ | मद्दाति | मद्दाति |
| ३९ | सतस्तु | ततस्तु |
| ७३ | पुयपे | पूर्ये |
| ८९ | मयिष्यामि | नयिष्यामि |
| ९१ | कोशन्वी | कोशन्ती |
| ९४ | मुक्तस्तु | मुक्त्वा तु |
| ११२ | मर्हासि | मर्हसि |
| १५० | मोन्हान | नोऽन्हान |
| १८४ | सुमीवेण | सुग्रीवेण |
| ,, | ग्रिष्वभिहतो | गात्रेष्वभिहतो |
| १८५ | तु | स तु |
| १९२ | दृर्पे | दृपे |
| २०९ | सुग्रीव | सुग्रीवः |
| २१८ | पुत्रवत्वे | पुत्रवते |
| २३४ | स | न |
| २३९ | सत्वार्थ | तत्त्वार्थ |
| २५९ | समाहिता | समाहिता |
| २७१ | सोपसर्त्य | सोऽपसर्प्य |
| २८८ | मष्टली-सर्वा | मण्डली सर्वा |
| २९५ | मसुते | मसूते |
| ३११ | नन्दन्त | नदन्त |
| ,, | महधिराणां | महीधराणां |
| ३१२ | ममेण | प्रभेण |
| ३१८ | पट्ट | पट् |
| ३२९ | भैगाद्रुव | भोगाद्रुव |
| ३२५ | नैर्दो | नैर्ऋेा |
| ३४३ | पर्णे | पर्णी |
| ३४८ | हृदस्य | न्हृदस्यं |
| ३६७ | सतत्कृत्या | सतकृत्या |
| ,, | समावृता | समावृताः |
| ,, | महदूर्त | महद्भूतं |
| ,, | ददर्शनास | ददर्शान्त |
| ३७९ | मसाद | ममाद |
| ४०३ | महात्मन | महात्मना |
| ४०८ | तस्मिगिरि | तस्मिन्गिरि |
| ४१४ | जगृह | जगृहु |
| ४४५ | ५४५ | ४४५ |
| ४६७ | जापकस्य | अनपकस्य |
| ४७१ | समद्रस्य | समुद्रस्य |
| ४७४ | कर्य | कर्य |
| ४८७ | ।वस्याता | विख्याता |
| ५०४ | मवने | भुवने |

सुंदरकाण्डम् ॥

| श्लो॰ | अशुद्धम् | शुद्धम् |
|---|---|---|
| २ | अञ्जर्लि | अंजर्लि |
| ६ | रीति | रीती |
| ७ | समन शिळा | समन शिळा |
| २८ | मैव | नैव |
| ,, | शारीराणि | शरीराणि |

| श्लो० | अशुद्धम् | शुद्धम् |
|---|---|---|
| ३२ | इक्षाकु | इक्ष्वाकु |
| ,, | वानर | सागरः |
| ४० | दीप | द्वीप |
| ४३ | स केतको | सकेतको |
| ५६ | रलंकताम् | रलंकृताम् |
| ५७ | सिता भ्र | सिताभ्र |
| ७७ | यथ | यथा |
| ८१ | कृताश्वान्या | वृसाश्वान्याः |
| ९९ | विराजिता | विराजता |
| १०० | ,, | ,, |
| ११९ | सौधोमीणमर्यानि | सौधोर्मणिमया |
| १२४ | चतुरंगल | चतुरंगुल |
| १४५ | संध्याथ | सध्यार्थे |
| १७४ | व्रजमं | व्रजन् |
| १९५ | शरी रें | शरीरे |
| १९६ | तत्वेन | नत्त्वेन |
| १९७ | चारुसजात | चारु संजातं |
| २२१ | नु | न |
| २२४ | दर्शनम् | दर्शनाम् |
| २४२ | संकल्प | स कल्प |
| २४५ | दशनाः | दर्शनाः |
| २६५ | सनिर्वाक्यो | स निर्वाक्यो |
| २९३ | कान्तर | कान्तार |
| २९४ | तत्वत | तत्त्वतः |
| २९५ | हनुमार्नाश्च | हनुमांश्च |
| ३०६ | आयछत् | आयच्छत् |
| ,, | पहात्मने | महात्मने |
| ३१८ | वेदाश्च | वेदांश्च |
| ३२० | सहृट | सहृष्ट |
| ३८९ | पुरस्कत्य | पुरस्कृत्य |
| ३९६ | तत्वत | तत्त्वत. |
| ४१५ | सीत | सीता |
| ४२९ | पुर्ण | तूर्ण |
| ,, | न नाद | ननाद |

| श्लो० | अशुद्धम् | शुद्धम् |
|---|---|---|
| ४३१ | तत्व | तत्त्व |
| ४३३ | ची रैश्च | चीरैश्च |
| ४४० | घमार्थ | धर्मार्थे |
| ४४४ | बुद्धा | बुद्धा |
| ४५१ | सहस्त्री | सह स्त्री |
| ४५८ | मुधनानि | मुद्यानानि |
| ४६८ | भङ्क्त्वा | भङ्क्त्वा |
| ४७४ | शैलेंद्र | शैलेंद्र |
| ४८७ | केश्चिदु | कोचिद् |

## युद्धकांडम् ॥

### (पूर्वार्द्धम्)

| श्लो० | अशुद्धम् | शुद्धम् |
|---|---|---|
| | पूवार्द्धम् | पूर्वार्द्धम् |
| ६ | रामस्तें | रामस्तं |
| ३७ | सहेम | स हेम |
| १२६ | प्राङ् | प्राङ् |
| १९१ | वीरै | वीरै |
| १९८ | तत्व | तत्त्व |
| ,, | मनुस्मन् | मनुस्मरन् |
| २०९ | सरोष | स रोष |
| २३५ | स सानु | ससानु |
| २८१ | वृतायाः | वृत्ताया. |
| २९६ | तस्य | तस्याः |
| २९८ | शरीरे | शरीरे |
| ३०६ | मृदंगाश्च | मृदगांश्च |
| ३१० | नैऋर्ता | नैर्ऋता |
| ३६० | राभेण | राभेण |
| ३७३ | अघु | अम्बु |
| ,, | मृदगाश्च | मृदगांश्च |
| ३७८ | शरी रे | शरीरे |
| ३७९ | सत्क | वक्त्रं |
| ४२५ | विर | रवि |
| ४२७ | वत्के | वक्त्रे |

| श्लो० अशुद्धम् | शुद्धम् |
|---|---|
| ४२८ श्रृंग | श्रृंग |
| ४२८ भीम | भीमं |
| ४४९ सदा | सदा |
| ४५८ पिगवान् | पिंगवान् |
| ४६५ प्रजज्वला | प्रजज्वाला |
| ४९३ लक्ष्मण | लक्ष्मण |

युद्धकांडम् ॥
( उत्तरार्धम् )

| श्लो० अशुद्धम् | शुद्धम् |
|---|---|
| ५ यात्रा | यवत्रा |
| १७ प्रव श्चाता | प्रवश्चात |
| ३१ मयदत्ता | मयन्वला |
| ४८ गवा क्षित | गवाक्षित |
| ६६ वृष्टि | वृष्टिभि |
| ७० लक्ष्मण | लक्ष्मण |
| ७७ त्वरा | त्वरता |
| ८१ वर्मं | यवत्र |
| ,, तोयदः | तोयद |
| १६४ लक्ष्मणं | लक्ष्मणं |
| २१७ पदद्भ्या | पद्भ्या |
| २३८ स्थाऽसु | स्थासु |
| २७१ रिवर्यदत्तां | रक्तं वदत्तां |
| २७३ संकाशां | सकाशां |
| २७७ श्रेष्ठ | श्रेष्ठ |
| २९३ स्थापयिष्यामि | मापयिष्यामि |
| २९६ सिष्ठति | तिष्ठति |
| ३०६ हैम्ये | हैर्म्ये |
| ३४२ अगस्त्यास्य | अगस्त्यस्य |
| ३६५ कौशल्यां | कौसल्यां |
| ३७३ सत्म् | सत्ले |
| ३८७ सवृतश्च | संवृतश्च |
| ३९२ वैभव्यानंदि | वैभव्यानद |
| ३९८ म हार्ह | महार्ह |
| ४१५ नैकतर्षिभि | नैर्कतर्षभैः |
| ,, लक्ष्या | लक्ष्या |

उत्तरकांडम् ॥

| श्लो० अशुद्धम् | शुद्धम् |
|---|---|
| ३४ पतियोद्र | प्रतियोद्वं |
| ८८ वी रेण | वीरेण |
| ९३ दृप्रात्ता | दृप्राता |
| १३१ देत्याल्ल्य | दैत्या लक्ष्य |
| १४३ करिष्याम | करिष्यामि |
| १४५ विद् | विद् |
| १४८ निर्कुंभिला | निकुंभिला |
| १७८ १७७८ | १७८ |
| २३७ गगातो रे | गंगातीरे |
| २४० तयो | तयो। |
| २४३ स्थास्ताण | स्थास्तीर्णे |
| २६९ न ासिका | नासिका |
| २७८ अद्मुयाखो | अवाद्मुखो |
| २८९ ती रे | तीरे |
| ३०७ वेट नी | वेटन्ती |
| ३०९ दृष्टाते | दृष्ट्वा ते |
| ३३३ वीरपाद | वीर पाद |
| ३३४ ग्रीष्ट | ग्रीष्ट |
| ३४४ पूर्वाह्णिक | पूर्वाह्णिक |
| ३५२ समाचरम् | समाचरत् |
| ३५६ रघुनदन | रघुनंदन |
| ३९७ भ्रातृश्च | भ्रातृश्च |
| ४२३ षड्भाग | षड्भाग |
| ४८६ स्वाङ्मुखी | स्वाङ्मुखी |
| ४९४ वेषा | येषां |
| ५०५ येयमनुत्तमम् | येयमनुत्तमम् |
| ५१३ च्यावियेकार्हो | च्य विवेकार्हो |
| ५१५ पुन्नास्ते | पुन्नास्ते |

॥ श्रीः ॥

अथ

# संक्षिप्तवाल्मीकिरामायणस्थविषमपदानां टिप्पणी।



## बालकांडम् ॥

५ करुणवेदित्वात्=सजातकरुणत्वात्, ह्रस्वश्छान्दस', विदे सत्तार्थात्ताच्छीलये वा णिनिः।

१० कुशशब्दस्य कुशीभाव पृषोदरादित्वात्।

१७ गोबलीवर्दन्यायेन पृथग्ग्रहणम्।

१८ तत्र=अयोध्यायामित्यर्थ।

२३ श्रोत्राश्रयं=कर्णशष्कुल्याश्रयं श्रोत्रेन्द्रियं तस्य सुखं सुखकारकम्।

३१ शतघ्यो नाम प्राकारसंरक्षणार्थमयो भारानिर्मिता प्राकारस्थापिता आयुधविशेषा।

३२ उद्यानाम्रवणेत्यत्र " मनिरन्त शरेक्षु " इत्यादिना णत्वम्।

३५ विविक्त=स्वसमूहाद्भ्रष्ट सहायरहित मिति यावत्।

,, अपरापरम्=परे पित्रादय अपरे पुत्रादयस्तैर्हीनम्।

३८ मतिरथ =दशसहस्रमहारथैर्योद्धा।

४२ सम्प्रजानता=पुरावृत्तान्त विषा रयताम्।

४७ सरितविक्रमः=शीघ्रगामी।

४९ लालप्यमानस्य=पुन पुनर्भृश च विलपत।

६२ ब्राह्मणाः=इदं त्रैवर्णिकानामुपलक्षणं द्विजत्वात्।

,, नामयन्त=दासा शूद्रा इति यावत्

६३ ससरे=ययौ।

६५ भवन्=अहभाव आर्ष।

६७ विशशास=विशसनं कृतवती ' महिष्यश्वासिना कल्पयन्ति" इति सूत्रात्।

८९ नाक्षत्रिके=स्वार्थे ठक्।

,, अदितिदैवत्ये=पुनर्वसौ।

९० मोदमाने=उदयं गच्छति सति।

९४ सार्पे=आश्लेषायाम्।

१ ९ अनूपके=दीर्घस्त्वमार्षमुदकप्रायविशिष्टे देशे।

११४ वसिष्ठव्यपदेशिन =वसिष्ठाज्ञानुवर्तिन।

११९ क्रोधमुत्स्रष्टुं=शप्तुम्।

१५९ सरय्वा=लक्षणया सरयूतीर इत्यर्थ।

,, अरिष्टं=शुभ रिषेर्हिंसार्थत्वात्।

१७७ अत्यर्धयोजने=अर्धमतिक्रान्ते अर्धाधिके योजन इति यावत्।

२१२ सागरसप्लवे=समुद्रमध्ये।

२१८ निरीतिका=निराबाधा।

२५४ विफल=विगतवृषण।

२८५ अकल्पयत=एकवचनमार्षम्।

२८८ लांगलात्=लांगलपद्धते।

२९७ वीर्यसंदिग्धा =संदिग्धवीर्या आहिताग्न्यादित्वात्रिष्ठाया परनिपात।

३२४ पुत्रकै =पुत्रैरित्यर्थ। कमरयेनानुरूपार्थेन धात्वर्थोतन जामातृमुख्या महाबलास्तेनेश्वरबुद्ध्या च पूज्यत्वेन बहुवचनप्रयोग।

| श्लोकांकः | बालकाण्डम्. | श्लोकांकः | आयोध्याकांडम्. |
|---|---|---|---|

१२९ पर्ययः=आतिक्रमः ।
१३७ उत्तरे=पुंस्त्वमार्षम् ।
१४७ एकान्हा=समासान्तानामानित्यत्वा-
ट्टजभावः सप्तम्यर्थे तृतीया ।
,, चतसृणां=दीर्घत्वमार्षम् ।
३७३ कन्याधन=यौतकाख्यम् ।
३८२ ससज्ञाः=ईषत्संज्ञाः ।
३८५ पृथग्जनैः=पामरजनैः ।
३९५ तद्वचन=द्वद्वयुद्धवचनम् ।
४०४ यन्त्रितकथः=नियमितोच्चैःकथनः ।
४०५ अनुरुध्यामहे=अंगीकुर्मः ।
४०९ विश्वामित्रकृतेन=विश्वामित्रभागिन्याः
पौत्रत्वेन ।
४३८ पितृकृता इति=पित्रा जनकेन ब्राम्हे-
ण विवाहविधिना दत्ता इति हेतोः ।

## अयोध्याकांडम् ॥

### पूर्वार्धम् ।

५ आमन्त्र्य=अभिमुखीकृत्य ।
१० मां=इत्थभूताख्यानविषये " कर्म-
प्रवचनीययुक्ते द्वितीया " इति
द्वितीया ।
३९ पश्यमानः=आत्मनेपदमार्षम् ।
४४ पुष्ययोगेन=चन्द्रस्य पुष्ययोगोपल-
क्षितकाले ।
६० क्वाप्यकारणेर्ष्यादिरहितम् ।
६३ अघौघेन=दुःखसमूहेन, अघं दुरित
दुःखयोरिति कोशः ।
९२ अपास्य=आस्तरणादाकृष्य ।
११८ विप्रकृता=प्रियया पराभूता ।
१२३ मंडले=यन्त्रमडले ।
१६५ पुत्रविक्रायक=पुत्रेण मूल्येन स्त्रीसु-
खक्रेतारम् ।
" विकरिष्यान्ति=विगर्हिष्यन्ति ।
१७३ आर्तवत्=रोगपीडितवत् । अथवा
स्वार्थे वतिः । आर्त एवेत्यर्थः ।

२०१ अभिदध्युषी=अभिध्यायन्तीत्यर्थे
आर्षमिदम् ।
२१९ अतिसृज्य=प्रतिज्ञाय ।
२३५ ब्रूमि=ब्रवीमि ।
२५९ सर्वलोकातिगस्य=जीवन्मुक्तस्य ।
२६१ अप्रियशासिवान्=अप्रिय शासिष्यन् ।
क्वसुरार्षः ।
२७३ अप्रजाऽस्मि=असिजभावः समासा-
न्तस्यानित्यत्वात् । साधिर्वा आर्षः
२९१ आनृण्यतां स्वार्थे ष्यञ् ।
३१९ कल्य=उषसि ।
४०५ आचारात्=दूरतः ।
४१० मुहूर्तस्य=मुहूर्तेनेत्यर्थः ।
४३९ अवस्त=धृतवान् वस् आच्छादने ।
४४८ परमायत्ताः=अत्यन्ताखिन्नाः ।
४५६ अन्तपालाः=शुद्धान्तरक्षकाः । रा-
ष्ट्रान्तस्थितदण्डधारका इत्यन्ये ।
४६२ पुत्रगार्धिन्या=पुत्रराज्याभिलाषवत्या ।
४८३ भ्रातुः=जननीमिति शेष कृत्वा कौ-
सल्यामिति पदेन संबन्धः ।
५१३ लुलितम्=कलुषम् ।
५३७ अन्वजाग्रत्=अजागरीदित्यर्थे आर्ष-
मिदम् ।
५४४ वत्स्यामहेति साधिरार्षः ।
५५० नित्यदा=छान्दसो दाप्रत्ययः ।
५५२ शुभस्फ्येत्यादि=स्फ्यः अरित्रम् ।
५६७ ऋश्य=ऋश्यादयो हरिणभेदाः ।
५७६ गाम्=मधुपर्काग महोक्षम् ।
५९६ काठिनकाज=काठिन खनित्रम् काजं
पेटक द्वद्वे एकवद्भावः, काठिनक
खनित्र आज चर्मपिनद्ध पेटकमि-
त्यर्थ इत्यन्ये ।
५९७ संघाट=प्लवम् ।

| श्लोकाः | अयोध्याकाण्डम् |
|---|---|
| ५९९ | घेरतु भुक्तवन्तौ । |
| ६०३ | द्रोणप्रमाणानि=आढकचतुष्टयं द्रोणम् । |
| ६१२ | बद्धवर्ग=बद्धवर्गाः छान्दसो यकारलोप । यद्वा बद्ध कटो वर्णाधारको यस्याम् । |

अयोध्याकाण्डम् ॥
उत्तरार्धम् ।

| श्लोकाः | |
|---|---|
| ३३ | पूर्वत =शास्त्रतत्वमार्गम् । |
| ४४ | एक पदी=सूक्ष्ममार्ग । पाउल वाट इति भाषा । |
| ४७ | उद्धरम्=अहभाव आर्ष । |
| " | फलैव=विशीयत । |
| ६३ | काल करिष्यति=मृत्युं प्राप्स्यसि । |
| ६५ | शब्दवेध्यनुकर्षिणा=पूर्वं शब्दवधिना पश्चाद्विद्धस्यानुकर्षणमपि कुर्वता । |
| ७२ | मुक्त मार्गगतं=मोहमादि विहाय स्वोद्धमार्गगतं मुक्तमिव। |
| ८५ | विषमे=कान्तारे। |
| ८७ | किंपाक=निंब विषभेदो वा । |
| ९४ | राजकर्तार=राज्ञो ऽशेषकार्यकर्तार |
| ९९ | मकीर्यते=आरोपो न क्रियते फलकाले लुठाव शक्या । |
| १०१ | स्वर्क=जीवनम् । |
| १०३ | तम इव=तमसीव प्रथमार्थे सप्तमी । तमस्यपि तम तमेति द्विरूपकोशा दुकारान्तोऽयम् । |
| ११३ | गिरिव्रज=केकयराजगृहापरनाम कम् । |
| १२५ | मे=शेषत्वाविवक्षायां षष्ठी मामित्यर्थे । |
| १३१ | निष्कम्=उरोभूषणम् । |
| १८९ | स्ववृत्ति=स्वस्य सत्पर्यायतिलक्षणां वृत्तिम् । |
| १९४ | उपगुह्य=आलिङ्ग्य । |
| २२१ | वृथा=श्राद्धादिनिमित्तं विना । |
| २३३ | सयान=प्रेतनिर्हारम् । |
| २३४ | धरणीं गत =नमस्कर्तेत्यर्थ । |
| २३५ | आपीतवर्णवदन=प्रमुदियसतैल्यात्र स्नानापाधिना वदने पीतत्वमासि । |
| २४४ | दशाह=अत्यंतसंयोगे द्वितीया । क्षत्रियस्तु दशाहेन स्वधर्मनिरत शुचिरिति पराशर । |
| २५५ | मकृतिमान्=सत्यप्रकृति । |
| " | वैद्य सर्वज्ञ । |
| २५७ | त्रीणि द्वन्द्वानि=बुभुक्षापिपासे शोकमोहौ, जरामृती । जन्ममरणे सुखदु खे लाभालाभौ वा । |
| २६७ | विषमाणि=निम्नोन्नतानि । |
| ३०४ | मैत्रे=उदयात्तृतीये मुहूर्ते । |
| ३१२ | शुध्यते=विश्वसिति । |
| ३१८ | मन्त्रिणां=मन्त्रयिवाम् । |
| ३२९ | स्म तं छान्दसो विसर्गलोप । |

| श्लोकाः | अरण्यकाण्डम् |
|---|---|
| ३६३ | अभ्यर्घ=सार्धयोजनम् । |
| ४१६ | निर्वाप चकार=पिंड ददौ । |
| ४३९ | आसक्त=भावे निष्ठा । स्नेहासंगोपेतम् । |
| ४८५ | समनुवर्तन्ते=वशिष्ठ इति कर्तृपदस्य लोप । |
| ४९७ | शुम्भ=क्षय पठथप आर्षी चतुर्थी |
| ५३६ | संचार=वृद्धिरार्षी । |

अरण्यकाण्डम् ॥

| श्लोकाः | |
|---|---|
| २ | रूपसंहनन=भाषायेऽशी सुश्लिष्टसंधिबंध । |
| १६ | प्रवरा=गर्त । |
| २५ | मरीचिपा =रविचन्द्रान्यतरकिरणजीविन । |

| श्लोकांकः | अरण्यकाण्डम् |
|---|---|
| २५ | अश्मकुट्टा.=अपक्ककुट्टितान्नभक्षकाः । |
| २६ | दन्तोलूखलिनः=दतातिरिक्तावहननसाधनरहिताः । |
| ” | उन्मज्जका =कण्ठदघ्ने जले स्थित्वा तप' कुर्वन्त । |
| ” | अनवकाशिकाः=एक पादस्य स्थित्यवकाशदानरहिता. । |
| ३१ | विप्रकार=दु.खम् । |
| ४५ | कटुकोदय =कटुकरससबध्युदयः । |
| १०८ | मस्करै =वेणुभिः । |
| १२८ | व्यजन=लक्षणम् । |
| १३९ | विरूपा=विशिष्टरूपाम् । |
| ” | असती=न विद्यते अन्या सती यस्यास्ताम् । |
| ” | कराला=अवयवसंनिवेशैर्युक्तैर्निम्नोन्नताम् । |
| ” | निर्णतोदरी=तनुमध्याम् । |
| ” | वृद्धां=ज्ञानवृद्धाम् । एषां पंचानामर्थांतर तु स्पष्टमेव । |
| १४८ | कर्णनासे=आर्षत्वादेकवत्वाभावः । |
| १५८ | औत्पातिकान्=स्वार्थे ठक् । |
| १८२ | उपजहार=उपहारत्वेन दत्तवान् । |
| २२४ | रक्षसा=आर्षी षष्ठी । स्वस्तियोगे चतुर्थीप्रासेः । |
| २३० | शतयोजने=तटात्तत्पर्यंतदेशास्थिते समुद्रे । |
| २४७ | सुसहत =श्लिष्टसंधिबन्धः । |
| २४९ | विटपीना=दीर्घ आर्षश्छन्दोऽनुरोधात् । |
| २८० | पृषत=मृगम् । |
| २९२ | अनार्यकरुणारभ=अनार्यया कुत्सितया करुणया रामव्यसनेऽपि मद्विषयारभो मद्रक्षणारभो यस्य । |

| श्लोकाकः | किष्किधाकाण्डम् |
|---|---|
| ३०७ | उपानही=व्रीह्यादिभ्यश्चेतीनिः । |
| ३३९ | लोढे=लेक्षीत्यर्थः । आर्ष. प्रथमपुरुषः । |
| ” | न्यायसयुक्ते.=वैशेषिकाद्युक्ततर्काभासयुक्तैर्हेत्वाभासैः । |
| ३६८ | वेदश्रुती=छान्दसो दीर्घ. । |
| ३७५ | अल्पजीवितः=घटीमात्रावस्थानोचितप्राण । |
| ३९५ | वित्रस्तका'=स्वार्थे क । |
| ४०५ | गोमायु.=शिवा । |
| ४२३ | नदीनदम्=नदीसबधिनद जातावेकवचनम् । |
| ४२६ | अर्जुन.=करवीरः । |
| ४४० | सीतेति=आर्षम् । |
| ४४४ | प्रश्रिताजालिः=बद्धाजालिः । |
| ४५४ | विकल=विवर्णम् । |
| ४५५ | अचेतसम्=अस्वस्थम् । |
| ४५६ | इव=एवेत्यर्थः । |
| ४६२ | बहुशोक्तवान्=आर्षत्वात्संधिः । |
| ४७२ | अन्वेषाति=अन्वेषसे । |
| ४८२ | वागुरा=मृगादिवधनजालम् । |
| ४८९ | दिधक्ष्यामि=दग्धुमिच्छामि इयन्नार्ष. । |
| ४९४ | गम्य=गत्वा । |
| ४९८ | उदरेमुख=अमूर्धमस्तकादित्यलुक् । |
| ५०८ | सिद्धा=सिद्धयोगा । |
| ५१० | मेघघनप्रख्य=मेघो प्रवर्षुको यो घनस्तद्वन्नीलम् । |
| ५१६ | कुथा=गजास्तरणकबलाम् । |

## किष्किधाकांडम् ॥

| | |
|---|---|
| १ | पुष्करिणी=पम्पानदान्तर्गत पपाख्य मतङ्गाख्य वा सरोविशेषम् । |
| ३ | सुरभिर्मासः=मधुमासः । |
| ९ | दात्यूहको=जलकुक्कुट. । |

श्लोकाङ्क किष्किन्धाकाण्डम्

२३ सुखाष्टता=सुखकारी 'सुखप्रियादानुलोम्ये' इति टाप् ।
५८ गतयः=परिपाका ।
६० मार्गाव=मार्गयाय ।
७८ वानरं=वानरस्येदम्-आर्षोऽण् ।
८८ अन्तरं=छिद्रं ।
" प्रेष्मुना=दिदृक्षुणा ।
" देयश्रुतीमिव=प्रयुक्तेष्टमदत्तां देयस्य धर्मस्य ब्रह्मणश्च साधनभूता श्रुति त्रयी तामिव दीर्घ आर्षं ।
९७ मियेति=सधिरार्थं ।
११३ प्रमार्जयत=प्रामार्जयदित्यर्थं । अडभाव आर्षं ।
१३७ चिन्ताय=परस्मैपदमार्षम् ।
१४२ मलम्बीष्ठ तभूषण=हारांगमणामत्र शास्त्रमानावस्थायघोर कण्ठादिवर्ति सकलभूषण ।
१४८ भ्रातगाधिनं=अनर्थेन भ्रातृव्यपदेशम् ।
गजपुष्पी=नागलता ।
१८६ युद्धपेतां=अडभाव आर्षः । अभ्युपेतामित्यर्थं ।
२०६ शल्यक=सह्री ।
" श्वाविध=कटकाकारदीर्घरोमाभि र्नानी वेधको जंतु ।
२२७ श्रमणेन-अर्हतेन ।
२३९ पत्रदर्शन=उद्घोषघोषम् ।
२५७ कालं=जन्ममरणादिरूपम् ।
२६५ चित्रपत्तीभि=चित्रपदातिभि दीर्घ आर्षं ।
२७१ अपसव्यं=अपसव्यप्रदक्षिणम् ।
२७३ शाखामृगमहामात्राः=वानरबलम धामा ।
३ १ माधीता=मन्त्रान्ताध्ययनामटयन्‌गा ।

श्लोकाङ्क सुन्दरकाण्डम्

३१२ बलाकपंक्ति=आर्षो ह्रस्व ।
३२२ उपोपयाति=मसमुपोद पादपूरणे इति ह्रिस्वम् ।
३३२ पश्रुर्थं=प्रावट् तेन गर्हित चारित्या यद्वृत्तगनसादार्षो ऽसमासे ल्यप् ।
३७० लभित=अयोध्यातोऽप्यधिकसी माग्यदर्शनादलका । परस्त्रीदर्शनेन हृता लभेरयन्ये ।
४२० समभिवर्तत=अभ्यवर्तत । अडभाव आर्षं ।
४३५ स्यातकर्मापदानाः=ख्यात कर्मणि युद्धेऽपदान शौर्य येषाम् ।
४७४ मुवन्=अमुवन् अडभाव आर्षं ।
४७५ अनुमान्य=अभिपूज्य ।
४८२ अरिष्टनेमिन=कश्यपस्य, नान्तत्वमार्षम्
४८७ अप्सरा=आयन्तासमार्षम् ।

---

सुंदरकांडम् ॥

४ निष्प्रमाणशरीरः=परिच्छेदातिक्रान्तदेह ।
२५ स्फिक्तदेशेन=कटिमदेशेन ।
३८ आलम्भ=स्पृष्ट्वा ।
५२ वृषदंशकमात्र=वृषान्मूषकान्दशतीति वृषदंशको मार्जारस्तत्प्रमाण ।
६२ निर्यूहा=मत्तवारणा ।
८५ माहू सपनिपाय=ईवुदेहियचनं मगृहामिति मगृह्यसंज्ञार्या प्रकृतिभाव ।
१ ३ एकान्तविन्यस्ते=शयनारहयाविन्यस्ते
१२१ वैकृत्य=विकार स्वार्थे ष्यञ् ।
१२७ पश्यामि=वर्तमानसामीप्ये लट् ।
१३२ पुष्पवृष्ट्य=पुष्पवृष्टीरित्यर्थ ।
१५५ स्मृतीम्=आर्षत्वाद्दीर्घ ।

| श्लोकाकः | सुन्दरकाण्डम् |
|---|---|
| १६३ | धारयति=वर्तमानसामीप्ये लट् दधारेत्यर्थ । |
| १७४ | अनुव्रजन्=अडभाव आर्षः । |
| १७६ | बृसी.=आसनविशेषान् । व्रुवन्तोऽस्या सीदन्तीति बृसी । |
| १७७ | पानस्य=पानेनेत्यर्थः । |
| १८५ | दिग्धांगी=रुपितांगीम् । |
| १८८ | तम.=राहु· । |
| १८९ | मृजया=अगशुद्ध्या । |
| १९६ | प्रणयस्व=समानन कुरु । संमानने नयतेरात्मनेपदम् । |
| २१२ | अकृतात्मान=सदुपदेशाग्राहिबुद्धिम् । |
| २१४ | अनन्या=अभिन्ना । |
| २२१ | ककवाससः=बाणाः । |
| २२७ | वामः=सव्ये क्रौर्ये सुन्दरे च वाम इति कोशः । |
| २३९ | कस्माच्चित्=चिदिति पादपूरणे । |
| २४२ | चैत्य=बुद्धायतनम् । |
| २४९ | प्रतिलोमानुलोमैः=प्रातिकूलानुकूलव्यवहारैः । |
| २५० | आवर्जयत=आनुकूल्य सपादिवान् । |
| २५१ | प्रतिगर्जत=प्रत्यगर्जयत् । |
| २६० | सुवर्चला=सूर्यपत्नी, सूर्याभिमुखस्यपुष्पवती काचिदौषधिरित्यन्यः । |
| २७० | मानुषः=मनुष्यज्ञात्युचितः । |
| २७७ | सीतया=षष्ठयर्थे तृतीया । |
| २७९ | सुमित्रेति=इकारलोप आर्षः । |
| २९४ | विक्रांतः=शूरः । |
| ३२० | प्रतिसहृष्ट=पुलकितम् । |
| ३३४ | देवप्रकाशेन=देवावतारेण । |
| ३३५ | अग्निपर्वतः=सवर्ताख्य कालाग्निनिवासभूत· पर्वतः । |
| ३३९ | आसि=भविप्यसि । |
| ३५० | दुःखानां=दुःखहेतुपापानाम् । |
| ३५२ | विवासात्=विदूरवासात् । |
| ३६० | शची=अनुह्लाददैत्यनीताम् । |
| ३६१ | मद्य=मत्तः । |
| ३६३ | दर्दुरः=पर्वतविशेषः । |
| ३९७ | त्रयाणां=कर्मणि षष्ठी । |
| ४२४ | सप्तार्चिवर्चसः=रेफलोप आर्षः । |
| ४२९ | अब्रवीत्=अप्राक्षीदित्यर्थः । |
| ४४२ | व्यलीकं=अपराधम् । |
| ४४३ | अर्थानुयायि=शास्त्रानुगतम् । |
| ४४९ | वेष्टन्ते=अवेष्टयन्तेत्यर्थः । |
| ४९१ | रामप्रतीकारे=रामकर्तव्ये रावणप्रतिकारे मध्यमपदलोपी समासः । |
| ४९३ | निसर्ग=आज्ञाम् । |

## युद्धकांडम् ॥
### पूर्वार्धम् ।

| श्लोकाकः | युद्धकाण्डम्. |
|---|---|
| ६ | प्रीतिहृष्टांगः=प्रीतिपुलकितगात्रः । |
| ७ | सुग्रीवस्य=सप्तम्यर्थे षष्ठी । |
| २२ | चण्डस्य=उचितकोपस्य । |
| १६ | गर्जो मेघादिसदृश· शब्दः । क्ष्वेला तु सिहनादः स्यादिति निघण्टुः । निनदः सामान्यशब्द इति प्रत्येकं सूक्ष्मतया भिन्नार्थत्वान्न पुनरुक्तिः । |
| २२ | आनुपूर्व्येण=सेनासनिवेशक्रमेण । |
| २३ | सहसोत्थितैः=लहरीरूपेणागतैः । |
| २५ | मन्त्रः=विचारः । |
| ४७ | फालिष्यति=विशीर्णो भविष्यति । |
| ५१ | पश्यति=न पश्यति स्मेत्यर्थः । |
| ५४ | अस्य=अस्मै चतुर्थ्यर्थे षष्ठी । |
| ५८ | सुनिविष्ट=सुनिविष्टार्थम् । |
| ६१ | प्रधान=ज्येष्ठत्वादिना प्राप्तराज्यम् । |
| ६२ | वैद्य=विद्यावन्तम् । |
| ६७ | न भवेत्=न जीवेत् । सोदरत्वेन |

| श्लोकाङ्क | युद्धकाण्डम् |
|---|---|
| | यथानर्हत्यादिकृतिरेव ते दण्ड इति भाव । |
| ७८ | व्यवियत=स्थितेर्हि प्रयोग निर्भयत्वेनावस्थानसूचनार्थम् । |
| ८३ | विपरीतः=मुमूर्षु । |
| ८६ | संरब्धं=संरम्भोपेतमित्यर्थ । क्रिया विशेषणम् । |
| ८८ | निष्कृतिज्ञा =कपटोपायेन युद्धविधिप्रकरणाभिज्ञा । |
| ९३ | दैव =रप्रमहाररूप । |
| ९५ | प्रणाद=युद्धरूपकोलाहल । |
| ९८ | आनृशंस्यार्थ=अघातुकत्वसिद्धयर्थ । आश्रितरक्षणरूपपरमधर्मपालनाय वा । |
| ११४ | भद्रेत्यादि=गोधा व्याघातवारणम्। |
| ११६ | अनीकपाः=त्रपसेनापतय । |
| ११७ | अभिजग्मतुः=अभिजग्मुः । द्विवचनमार्षम् । |
| १३५ | शरपाणिनं=शरपाणिम् । |
| १४१ | उत्तरेण=एनबन्तमव्ययम् । |
| १४६ | मरवे=मरुदेशाय । |
| १५० | वृत्तवर=सर्ववस्तुनिर्माणसामर्थ्य इति शेष । |
| १६४ | अवासर्पत्=अथ पपात । |
| १७१ | सुवेलस्याधिकृत्य=सामीप्ये सुशब्दस्याव्ययीभाव वेलासमीप पर्यारम्भिक्रमेत्यर्थ । |
| १७२ | स्वातीपथ=छायापथ । |
| १७४ | बभ्रन्तः=छिद्रत्यसयप आर्ष । |
| १८६ | संपीडय=उर्वी रच्मा । |
| १९८ | आनंतर्यम्=अनंतरकर्तव्यम् । |
| २०६ | अतिपस्य=मार्गमिति शेष । |
| २१९ | अक्षौहिणिशतं=आर्षो ह्रस्व । अक्षौहिणीत्याद्युपलक्षणमिति वृद्धि । शतशब्दोऽनन्तवाची । |
| २२१ | वानरीं तनुम्=अभूततद्भावे च्चि । वानररूपेनेमितरूपमिव कृतम् । |
| २२७ | परिखान्=पुंस्त्वमार्षम् । |
| २३३ | चंद्रपाण्डुरपुष्करा=पुष्कराणि मुखानि । |
| २३५ | सक्षानुमस्यमन्दर=सानुर्महाप्रस्थस्य कूद । |
| २४८ | पताकाध्वाजिन=पताकोध्वजवतान् मत्वर्थीय इति । |
| २५९ | अशनिवर्चस=वज्रवत्तेजस्विन |
| ३०४ | सन्नानितोऽपि=बद्धोऽपि । |
| ३०७ | यथापुरम्=यथापूर्वम् । |
| ३२३ | योत्स्यदेवेत=पुन पुनर्युद्धमकुर्वन्मित्यर्थ । |
| ३२४ | मास्य=आच्छिद्य । |
| ३२५ | बलाध्यम्=सेनापतिं महत्त्वम्। |
| ३३० | अन्ययुद्धात्=अन्यकर्तृकयुद्धात् । हेतौ पंचमी । |
| ३३९ | परमायत्त -परमोयुक्तः । |
| ३६९ | आश्वासयामासु=ध्यापयामासु । |
| ३७४ | महाकाष्ठकटकरै स्थूणादीनां समूह कटकैरित्यपि पाठ कटकं स्तम्भमेव । |
| ३७९ | आजम्भमाणस्य=पुन पुनर्जृम्भां वर्तः । |
| ३९७ | अभ्युपपद्य=अनुगृह्य । |
| ४०९ | सर्वकालायसं=सर्वेष्वयमयेषु दण्डेष्वपि कालायसनिर्मितम् । |
| ४१० | मणिकृतान्तराम्=मणिर्देचितमध्यभागाम् । |
| ४१४ | पक्षपो=सन्नाहनक्षमवाहनाभावात् |

| श्लोकांक: | युद्धकाण्डम् |
|---|---|

पद्भ्यामेव लघनम् ।

४३० व्यथयां प्रचक्रुः आमन्तस्य व्यवहितप्रयोग आर्षः ।

४४७ आरक्षस्थाः=द्वारस्थाः ।

४४८ गोपुराट्टप्रतोलीषु=गृहोपरितनं गृह गोपुर, अट्टः क्षौम रथ्या वा, प्रतोली अल्परथ्या ।

४४९ पतति=अपतन् ।

४५० दह्यते=दग्धः ।

४५७ विनेदुषः=क्वस्यन्तम् ।

४६६ निकुम्भिलां=दशम्या पूर्वार्धे तत्र गमनम् । निकुम्भिला चैत्यं तदारण्यदेवालय वटवृक्ष वा ।

४९४ अवष्टभ्य=अवलम्ब्य ।

४९९ व्यपाश्रयः=अवलम्बनभूतः ।

५०३ नस्तः नासिकायां । सप्तम्यां तसिलू ।

## युद्धकाण्डम् ।

### उत्तरार्द्धम् ।

२ कश्मल=मूर्च्छाम् ।

१९ अभ्युत्थान=समरोद्योगम् ।

३३ रथ=आमाया सूर्योदय इद रथारोहणम् ।

१४६ ववर्षतुः=ववृषतु ।

४८ गृध्रपत्रै.=गृध्रबन्धनैः ।

,, सुवार्जितै.=सम्यक्सपादितवेगैः ।

५३ सभावितततरा=अमोघेति सर्वविख्याताम् ।

६२ प्रतिश्रृणोमि=प्रतिजाने ।

६९ उदीरयन्=जनयन् ।

,, प्राणैः=प्राणेभ्यः ।

७१ लन्नतीव=परस्मैपदमार्षम् ।

८५ सावर्ण्यकरणी=पूर्ववर्णसमानवर्णकारिणीम् ।

९७ सक्षोदयित्वा=समर्द्य ।

| श्लोकाक: | युद्धकाण्डम्. |
|---|---|

१०४ ब्रम्हदत्त=ब्रम्हणा इद्राय दत्तः स इद्रेण रामाय दत्तस्तम् ।

१२३ अशकितः मृत्युशकारहित एव दैव रपातितः ।

१३० वत्सहताः=अयमत्यासवियोगजश कमात्रे दृष्टान्त. ।

१३६ स्नापयन्ती=ग्लास्नावनुवर्मा चे सूत्रेण मित्वस्य वैकल्पिकत्वान्मित्व भावेन ह्रस्वाभावः ।

१३७ मण्डोदरी=मण्डनभूतोदरी कृशोदर त्यर्थः ।

१४१ अप्रतितर्किता=अचिन्तनीयोपपत्तिकाम् ।

१४३ मान्यां=उपास्यदेवताम् ।

१४७ दानवराजः=मयः ।

१७६ मृजया=स्नानादिसस्कारेण ।

१८१ सभाजये=प्रीणयामि ।

१८३ वर्तन्त्या=वर्तमानया । परस्मैपदमर्षम् ।

२६० आकारसूचितं=भ्रूभगाद्याकारसूचि तम् ।

२८१ तेजसा= पातिव्रत्येन ।

२८३ अनन्या=अर्धो वा एप आत्मन यत्पत्नीति श्रुते. । शाक्तिशक्तिमतो भेदाच्च । अनेनाग्निदत्ताया रावणस्पर्श द्यभावः स्पष्टमेवोक्तः ।

२९६ तदिदं=लकाया स्थितस्यापि पुष्प कस्यात्युन्नतता शिबिरस्थैरपि दृश्य मानत्वादिदमिति प्रत्यक्षवन्निर्देशः

३०० साचिव्येन=मन्त्रसाहाय्येन ।

३२३ हंसयुक्तेन=वाहकत्वाकारेण निर्मित हसप्रतिमा हसशब्देनोच्यते तद्युक्तेनेति व्याख्यातारः ।

| श्लोकाङ्क उत्तरकाण्डम् | श्लोकाङ्क — उत्तरकाण्डम् |
|---|---|

३२३ मतीव=प्रत्यग्रचित्त ।
३२४ पातयित्वा=स्थार्य ।
३२६ आयोधन=युद्धभूमिम् ।
३४३ कुलपारी -आश्रमवासी कुलमन्य यसंघातगृहीतस्याश्रमेषु च इति कोश ।
३५२ चातुर्वर्ण्यस्य=स्वार्थे प्यञ । चतुर्वर्ण रूपस्य ।
३६ मिथास्थानस्य=तत्कर्तु । कर्तरि ल्युट् ।
३६५ सनैगमैः=नैगमा वणिज ।
३८४ व्याकोशानि=विकसितानि ।
३८६ न्यास निर्यातित=न्यासभूतं मयि स्थितं तुभ्य निवेदितम् ।
३९४ चक्र=ज्योतिश्चक्रम् । अनेन काला वधिरच्यते ।
" वसुंधरा=अनेन देशावधिरुच्यते ।
३९६ श्मश्रुवर्धना=श्मश्रुच्छेदका ना पिता इत्यर्थ ।
३९९ मतिकर्म=अलंकरणम् ।
४०५ समयोस्यत=आर्षो लट् ।
४२६ आर्ष=ऋषिर्वेदस्तत्संबंधि वेदोपबृह णामिति यावत् ।

---

## उत्तरकाण्डम् ।

६ प्रमाणात्=आकारप्रमाणात् ।
८ पर्यसि=वर्धसे ।
१५ पक्षाम=पक्ष पूजायामित्यस्माल्लोटि उत्तमस्य बहुवचनम् ।
२० सालकटंकटा=एतदाख्येयं राक्षमा धान्येन भगरस्वइत्याद्राक्षसी ।
३३ दद्दश=ददृश आर्षो ल्यप् ।
३६ सालकटंकटे=माल्यवदादे पिता मही विद्युत्केशपत्नी सखीये वंशे । वृद्धाच्छाभाव आर्ष ।
४२ वेलां वारुणीं=प्रदोषमित्यर्थ ।
५२ पश्चिम =कनिष्ठ ।
८५ घृता=घृतगर्भा । प्रसूतेत्यर्थ ।
९३ वशीरबीज=देशनाम ।
९९ सत्त्वानि=प्राकार्यवशगृहीतमूर्तिजा तीयमाणिन ।
१०७ क्रोडा =भुजान्तराणि ।
११२ घने=घनपृष्ठे ।
११८ देवगवर्वविहार=सालोकक्रीडापर ।
१२९ अध्युष्ट=अध्युषितम् ।
१३१ वसन्=अवमाय आर्ष ।
१३४ नित्यमहर्ष=महद्यजनम् ।
१४८ निकुंभिला=लंकापश्चिमद्वारदेशवर्ति कर्मसिद्धिहेतुभूतं काननम् ।
१५० विष्ठितं=प्रवृत्तम् ।
" कमण्डलुशिखाध्वज=कमण्डलु शि खाध्वजो दण्डश्च यस्य तम् अर्श आद्यजन्तम् ।
१७२ महोऽस्य=संधिरार्षः ।
१७८ जप्यहोमे=समाहारद्वन्द्व ।
१९३ अपत्यलाभ इत्यादि=गर्भलक्षणं तत्र स्पष्टं वर्तत इति श्लोकार्थ ।
२०८ अनुवर्तते=अनुवर्तन्ते एकवचनमा र्षम् ।
२१८ अन्वेष्टव्यो=अनुसरणीय ।
२२२ बीभत्सा=कुत्सा ।
२२७ महान्वादः=निन्दा ।
२३४ एतत्प्रतिवारिते=एतस्य प्रतिवारणे ।
२५४ शून्यां=सुष्ठुशून्याम् ।
२५८ त्रियम्बकः=त्र्यक आप ।
२७२ वचनीकृतः=पलोप आर्ष । वच

| श्लोकांकः | उत्तरकाण्डम् |
|---|---|
| | नीयो निन्द्यः कृतः । |
| २७३ | पाप कर्त=दोषं ज्ञातुमित्यर्थः । |
| २८४ | परमकः=अनुकपायां कन् । |
| २९४ | राजवशः=राजसतानः मयि गर्भस्य विद्यमानत्वादिति भावः । |
| ३०२ | सग्रहः=मया राम प्रति वक्तव्यसदेशस्य सग्रह इत्यर्थः । |
| ३०३ | ऋतुकालातिवर्तिनी=गर्भलक्षणवतीम् । |
| ३०६ | अनाथवत्=अनाथसदृशी न तु वस्तुतोऽनाथा पूर्णचिद्घनस्वरूपत्वादिति भावः । |
| ३०८ | यशोधरा=पातिव्रत्ययशोवती । |
| ३२४ | परिदाय=तापसीनां हस्ते दत्वा । |
| ३२५ | केशिन्यां=तन्नामकनद्याम् । |
| ३३७ | आत्मनात्मान=अन्तःकरणोपाधिजीवात्मना आत्मानमन्तःकरणम् । |
| ३४५ | समधिक=किंचिदधिकम् । |
| ३७८ | वृद्धाभिः=सूतीगृहे ऋपेः प्रवेशाभावात् । |
| ” | यमजातकौ=यमलौ । |
| ३८५ | भक्ष्याहारप्रचोदितः=भक्ष्यस्या आहरण तेन प्रेरितः । |
| ४०७ | पातयत्=अपातयत्।अड भाव ३ |
| ४६२ | व्युष्टायां=समाप्तायाम् । |
| ४६३ | शब्दापयति=कथयति । |
| ४९२ | गृह्य=गृहीत्वा । ल्यबार्प. । |
| ४९८ | अभूतपूर्व=पूर्वमप्राप्तम् । |
| ५०० | निर्यात्यतां=परावर्तय । |
| ५१५ | निवापान्=पिण्डान् । |
| ५१८ | अभिनत्=उल्लंघयामासेत्यर्थः । |

इति साक्षिप्तवाल्मीकिरामायणस्थविषमपदटिप्पणी समाप्ता ।

